॥ एकश्लोकी सुन्दरकाण्डम् ॥

यस्य श्रीहनुमाननुग्रह बलात्तीर्णाम्बुधिर्लीलया
लङ्कां प्राप्य निशाम्य रामदयिताम् भङ्क्त्वा वनं राक्षसान् ।
अक्षादीन् विनिहत्य वीक्ष्य दशकम् दग्ध्वा पुरीं तां पुनः
तीर्णाब्धिः कपिभिर्युतो यमनमत् तम् रामचन्द्रम्भजे ॥

इति राघवेन्द्रस्वामिविरचितं एकश्लोकी सुन्दरकाण्डं सम्पूर्णम् ।